॥ श्रीदत्तात्रेयोपनिषत् ॥

दत्तात्रेयीब्रह्मविद्यासंवेद्यानन्दविग्रहम् ।
त्रिपान्नारायणाकरं दत्तात्रेयमुपास्महे ॥

ॐ भद्रं कर्णेभिः श्रुणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा□सस्तनूभिर्व्यशेम देवहितं यदायुः ॥

स्वस्ति न इन्द्रो वृद्धश्रवाः  स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः  स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥ सत्यक्षेत्रे ब्रह्मा नारायणं महासाम्राज्यं किं तारकं तन्नो ब्रूहि भगवन्नित्युक्तः सत्यानन्द सात्त्विकं मामकं धामोपास्वेत्याह । सदा दत्तोऽहमस्मीति प्रत्येतत्संवदन्ति येन ते संसारिणो भवन्ति नारायणेनैवं विवक्षितो ब्रह्मा विश्वरूपधरं विष्णुं नारायणं दत्तात्रेअयं ध्यात्वा सद्वदति । दमिति हंसः । दामिति दीर्घं तद्बीजं नाम बीजस्थम् । दामित्येकाक्षरं भवति । तदेतत्तारकं भवति । तदेवोपासितव्यं विज्ञेयं गर्भादितारणम् । गायत्री छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । वटबीजस्थमिव दत्तबीजस्थं सर्वं जगत् । एतदैवाक्षरं व्याख्यातम् ।

दत्तात्रेयषडक्षरमन्त्रः

व्याख्यास्ये षडक्षरम् । ओमिति प्रथमम् । श्रीमिति द्वितीयम् । ह्रीमिति तृतीयम् । क्लीमिति चतुर्थम् । ग्लौमिति पञ्चमम् । द्रामिति षट्कम् । षडक्षरोऽयं भवति । सर्वसम्पद्वृद्धिकरी भवति । योगानुभवो भवति । गायत्री छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । ॐ श्रीं ह्रीं क्लीं ग्लौं द्रां इति षडक्षरोऽयं भवति ।

द्रमित्युक्त्वा द्रामित्युक्त्वा वा दत्तात्रेयाय नम इत्यष्टाक्षरः ।
दत्तात्रेयायेति सत्यानन्दचिदात्मकम् । नम इति पूर्णानन्दकविग्रहम् ।
गायत्री छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । दत्तात्रेयायेति
कीलकम् । तदेव बीजम् । नमः शक्तिर्भवति । ओमिति प्रथमम् । आमिति
द्वितीयम् । ह्रीमिति तृतीयम् । क्रोमिति चतुर्थम् । एहीति तदेव वदेत् ।
दत्तात्रेयेति स्वाहेति मन्त्रराजोऽयं द्वादशाक्षरः । जगती छन्दः ।
सदाशिव ऋषिः । दत्तात्रेयो देवता । ओमिति बीजम् ।
स्वाहेति शक्तिः । सम्बुद्धिरिति कीलकम् । द्रमिति हृदये ।
ह्रीं क्लीमिति शीर्षे । एहीति शिखायाम् । दत्तेति कवचे ।
आत्रेयेति चक्षुषि । स्वाहेत्यस्त्रे । तन्मयो भवति ।
य एवं वेद । षोडशाक्षरं व्याख्यास्ये ।
प्राणं देयम् । मानं देयम् । चक्षुर्देयम् । श्रोत्रं देयम् ।
षड्दशशिरश्छिनत्ति षोडशाक्षरमन्त्रे न देयो भवति ।
अतिसेवापरभक्तगुणवच्छिष्याय वदेत् । ओमिति प्रथमं भवति ।
ऐमिति द्वितीयम् । क्रोमिति तृतीयम् । क्लीमिति चतुर्थम् ।
क्लूमिति पञ्चमम् । ह्रामिति षष्ठम् । ह्रीमिति
सप्तमम् । ह्रूमित्यष्टमम् । सौरिति नवमम् ।
दत्तात्रेयायेति चतुर्दशम् । स्वाहेति षोडशम् ।
गायत्री छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता ।
ॐ बीजम् । स्वाहा शक्तिः । चतुर्थ्यन्तं कीलकम् ।
ओमिति हृदये । क्लां क्लीं क्लूमिति शिखायाम् । सौरिति
कवचे । चतुर्थ्यन्तं चक्षुषि । स्वाहेत्यस्त्रे । यो
नित्यमधीयानः सच्चिदानन्द सुखी मोक्षी भवति ।
सौरित्यन्ते श्रीवैष्णव इत्युच्यते । तज्जापी विष्णुरूपी
भवति । अनुष्टुप् छन्दो व्याख्यास्ये । सर्वत्र
सम्बुद्धिरिमानीत्युच्यन्ते । दत्तात्रेय हरे कृष्ण
उन्मत्तानन्ददायक । दिगम्बर मुने बालपिशाच
ज्ञानसागर ॥ १॥ इत्युपनिषत् । अनुष्टुप् छन्दः ।

सदाशिव ऋषिः । दत्तात्रेयो देवता दत्तात्रेयेति हृदये ।
हरे कृष्णेति शीर्षे । उन्मत्तानन्देति शिखायाम् ।
दायकमुन इति कवचे । दिगम्बरेति चक्षुषि ।
पिशाचज्ञानसागरेत्यस्त्रे । आनुष्टुभोऽयं
मयाधीतः । अब्रह्मजन्मदोषाश्च प्रणश्यन्ति ।
सर्वोपकारी मोक्षी भवति । य एवं वेदेत्युपनिषत् ॥ १॥

इति प्रथमः खण्डः ॥ १॥

ओमिति व्याहरेत् । ॐ नमो भगवते दत्तात्रेयाय
स्मरणमात्रसन्तुष्टाय महाभयनिवारणाय
महाज्ञानप्रदाय चिदानन्दात्मने बालोन्मत्त-
पिशाचवेषायेति महायोगिनेऽवधूतायेति
अनसूयानन्दवर्धनायात्रिपुत्रायेति सर्वकामफल-
प्रदाय ओमिति व्याहरेत् । भवबन्धमोचनायेति
ह्रीमिति व्याहरेत् । सकलविभूति दायेति क्रोमिति व्याहरेत् ।
साध्याकर्षणायेति सौरिति व्याहरेत् । सर्वमनः-
क्षोभणायेति श्रीमिति व्याहरेत् । महोमिति व्याहरेत् ।
चिरञ्जीविने वषडिति व्याहरेत् । वशीकुरुवशीकुरु
वौषडिति व्याहरेत् । आकर्षयाकर्षय हुमिति
व्याहरेत् । विद्वेषयविद्वेषय फडिति व्याहरेत् ।
उच्चाटयोच्चाटय ठठेति व्याहरेत् । स्तम्भय-
स्तम्भय खखेति व्याहरेत् । मारयमारय नमः
सम्पन्नाय नमः सम्पन्नाय स्वाहा पोषयपोषय
परमन्त्रपरयन्त्रपरतन्त्रांश्छिन्धिच्छिन्धि
ग्रहान्निवारयनिवारय व्याधीन्निवारयनिवारय दुःखं
हरयहरय दारिद्र्यं विद्रावयविद्रावय देहं
पोषयपोषय चित्तं तोषयतोषयेति सर्वमन्त्र-
सर्वयन्त्रसर्वतन्त्रसर्वपल्लवस्वरूपायेति ॐ नमः

शिवायेत्युपनिषत् ॥ २॥

इति द्वितीयः खण्डः ॥ २॥

य एवं वेद । अनुष्टुप् छन्दः । सदाशिव ऋषिः ।
दत्तात्रेयो देवता । ओमिति बीजम् । स्वाहेति शक्तिः ।
द्रामिति कीलकम् । अष्टमूर्त्यष्टमन्त्रा भवन्ति ।
यो नित्यमधीते वाय्वग्निसोमादित्यब्रह्मविष्णुरुद्रैः
पूतो भवति । गायत्र्या शतसहस्रं जप्तं भवति ।
महारुद्रशतसहस्रजापी भवति । प्रणवायुतकोटिजप्तो भवति ।
शतपूर्वाञ्छतापरान्पुनाति । स पङ्क्तिपावनो भवति ।
ब्रह्महत्यादिपातकैर्मुक्तो भवति । गोहत्यादिपातकैर्मुक्तो भवति ।
तुलापुरुषादिदानैः प्रपापानतः पूतो भवति ।
अशेषपापान्मुक्तो भवति । भक्ष्याभक्ष्यपापैर्मुक्तो भवति ।
सर्वमन्त्रयोगपारीणो भवति । स एव ब्राह्मणो भवति ।
तस्माच्छिष्यं भक्तं प्रतिगृह्णीयात् । सोऽनन्तफलमश्नुते ।
स जीवन्मुक्तो भवतीत्याह भगवान्नारायणो ब्रह्माणमित्युपनिषत् ॥

ॐ भद्रं कर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ॥

स्थिरैरङ्गैस्तुष्टुवा□सस्तनूभिर्व्यशेम देवहितं यदायुः ॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति दत्तात्रेयोपनिषत्समाप्ता ॥